चौखम्बा स्तोत्र ग्रन्थमाला
१

# अन्नपूर्णासहस्रनामस्तोत्रम्

(नामावलीसहितम्)

चौखम्बा संस्कृत प्रतिष्ठान : दिल्ली

मूल्य १०.००

ॐ

॥ श्रीगणेशाय नमः ॥

# ॥ अन्नपूर्णासहस्रनामस्तोत्रम् ॥

## ( नामावळीसहितम् )

**चौखम्बा संस्कृत प्रतिष्ठान**

( प्राच्यभारती के प्रकाशक एवं वितरक )

३८ यू. ए., जवाहरनगर, बंगलो रोड

पो० बा० नं० २११३



दिल्ली ११०००७

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

# ॥ अन्नपूर्णासहस्रनामस्तोत्रम् ॥

## (नामावलीसहितम्)

---

कैलासशिखरासीनं देवदेवं महेश्वरम् ।
प्रणम्य दण्डवद्भूमौ पार्वती परिपृच्छति ॥

॥ श्रीपार्वत्युवाच ॥

अन्नपूर्णा महादेवी त्रैलोक्ये जीवधारिणी ।
नाम्नां सहस्रं तस्यास्तु कथयस्व महाप्रभो ॥ २

॥ श्रीशिव उवाच ॥

शृणु देवि वरारोहे जगत्कारिणि कौलिनि ।
आराधिता च सर्वेषां सर्वेषां परिपृच्छसि ॥ ३
सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः ।
अन्नदायास्स्तवं दिव्यं यत्सुरैरपि वाञ्छितम् ॥ ४

कथयामि तव स्नेहात्सावधानावधारय ।
गोपनीयं प्रयत्नेन स्तवराजमिदं शुभम् ॥ ५
न प्रकाश्यं त्वया भद्रे दुर्जनेभ्यो विशेषतः ।
न देयं परशिष्येभ्यो भक्तिहीनाय पार्वति ॥ ६
देयं शिष्याय शान्ताय गुरुदेवरताय च ।
अन्नपूर्णास्तवं देयं कौलिकाय कुलेश्वरि ॥ ७

ओं अस्य श्रीमन्महाश्री अन्नपूर्णासहस्रनामस्तोत्रमालामन्त्रस्य, श्रीभगवान् सदाशिवऋषिः, अनुष्टुप्छन्दः, प्रकटगुप्तगुप्ततरसम्प्रदाय

कुलोत्तीर्णनिगर्भरहस्यातिपूर्वाचिन्त्यप्रभावा भगवती श्रीमन्महाश्रीअन्न-

पूर्णा देवता, ह्लों वीजं, स्वराश्शक्तिः, जीवो वीजं, बुद्धिश्शक्तिः, उदानो वीजं, सुषुम्ना नाडी, सरस्वती शक्तिः, धर्मार्थकाममोक्षार्थे पाठे जपे विनियोगः ॥

॥ ध्यानम् ॥

अर्कोन्मुक्तशशाङ्ककोटिवदनामापीनतुङ्गस्तनीं
चन्द्रार्धाङ्कितमस्तकां मधुमदामालोलनेत्रत्रयीम् ।
बिभ्राणामनिशं वरं जपपटीं शूलं कपालं करै-
राद्यां यौवनगर्वितां लिपितनुं वागीश्वरीमाश्रये ॥ ८

ओं अन्नपूर्णायै नमः ॥

अन्नपूर्णा अन्नदात्री अन्नराशिकृतालया ।
अन्नदा अन्नरूपा च अन्नदानरतोत्सवा ॥ १

अनन्ता च अनन्ताक्षी अनन्तगुणशालिनी ।
अच्युता अच्युतप्राणा अच्युतानन्दकारिणी ॥ २

अव्यक्ताऽनन्तमहिमा अनन्तस्य कुलेश्वरी ।
अब्धिस्था अब्धिशयना अब्धिजा अब्धिनन्दिनी ॥ ३

अब्जस्था अब्जनिलया अब्जजा अब्जभूषणा ।

अब्जाभा अब्जहस्ता च अब्जपत्रशुभेक्षणा ॥ ४

अब्जानना अनन्तात्मा अग्निस्था अग्निरूपिणी ।
अग्निजाया अग्निमुखी अग्निकुण्डकृतालया ॥ ५
अकारा अग्निमाता च अजयाऽदितिनन्दिनी ।
आद्या आदित्यसङ्काशा आत्मज्ञा आत्मगोचरा ॥ ६
आत्मसूरात्मदयिता आधारा आत्मरूपिणी ।
आशा आकाशपद्मस्था अवकाशस्वरूपिणी ॥ ७
आशापुरी अगाधा च अणिमादिसुसेविता ।
अम्बिका अबला अम्बा अनाद्या च अयोनिजा ॥ ८

अनीशा ईशिका ईशा ईशानी ईश्वरप्रिया ।
ईश्वरी ईश्वरप्राणा ईश्वरानन्ददायिनी ॥ ९

इन्द्राणी इन्द्रदयिता इन्द्रसूरिन्द्रपालिनी ।
इन्दिरा इन्द्रभगिनी इन्द्रिया इन्दुभूषणा ॥ १०

इन्दुमाता इन्दुमुखी इन्द्रियाणां वशङ्करी ।
उमा उमापतेः प्राणा ओड्याणी पीठवासिनी ॥ ११

उत्तरज्ञा उत्तराख्या उकारा उत्तरात्मिका ।
ऋमाता ऋभवा ऋस्था ऋऌकारस्वरूपिणी ॥ १२

ऌकारा च ऌकारा च ऌकारप्रीतिदायिनी ।

एका च एकवीरा च एकारैकाररूपिणी ॥ १३
ओंकारी ओघरूपा च ओघत्रयसुपूजिता ।
ओघस्था ओघसम्भूता ओघधात्री च ओघसूः ॥ १४
षोडशस्वरसम्भूता षोडशस्वररूपिणी ।
वर्णात्मा वर्णनिलया शूलिनी वर्णमालिनी ॥ १५
काळरात्रिर्महारात्रिर्मोहरात्रिस्सुलोचना ।
काळी कपालिनी कृत्या काळिका सिंहगामिनी ॥ १६
कात्यायनी कलाधारा कालदैत्यनिकृन्तनी ।

कामिनी कामवन्द्या च कमनीया विनोदिनी ॥ १७
कामसूः कामवनिता कामधूः कमलावती ।
कामदात्री कराळी च कामकेलिविनोदिनी ॥ १८
कामना कामदा काम्या कमला कमलार्चिता ।
काश्मीरलिप्तवक्षोजा काश्मीरद्रवचर्चिता ॥ १९
कनका कनकप्राणा कनकाचलवासिनी ।
कनकाभा काननस्था कामाख्या कनकप्रदा ॥ २०
कामपीठस्थिता नित्या कामधामनिवासिनी ।

कम्बुकण्ठी कराळाक्षी किशोरी च ललाटिनी ॥ २१

कलाकाष्ठा निमेषाच कालस्था कामरूपिणी ।
कालज्ञा कालमाता च कालधात्रीं कलावनी ॥ २२
कालदा कालहा कुल्या कुरुकुल्या कुलाङ्गना ।
कीर्तिदा कीर्तिहा कीर्तिः कीर्तिस्था कीर्तिवर्धिनी ॥ २३
कीर्तिज्ञा कीर्तितपदा कृत्तिका केशवप्रिया ।
केशिहा केळिकारी च केशवानन्दकारिणी ॥ २४
कुमुदाभा कुमारी च कर्मदा कमलेक्षणा ।
कौमुदी कुमुदानन्दा कौळिकी च कुमुद्वती ॥ २५

कोदण्डधारिणी क्रोधा कूटस्था कोटराश्रया ।
कालकण्ठी कराळाङ्गी कालाङ्गी कालभूषणा ॥ २६
कङ्काळी कामदामा च कङ्काळकृतभूषणा ।
कपालकर्तृककरा करवीरस्वरूपिणी ॥ २७
कपर्दिनी कोमलाङ्गी कृपासिन्धुः कृपामयी ।
कुशावती कुण्डसंस्था कौबेरी कौशिकी तथा ॥ २८
काश्यपी कद्रुतनया कलिकल्मषनाशिनी ।
कञ्जस्था कञ्जवदना कञ्जकिञ्जल्कचर्चिता ॥ २९
कञ्जाभा कञ्जशैलस्था कञ्जनेत्रा कञ्जोद्भवा ।

३०
कामरूपा च ह्रींकारी कश्यपान्वयवर्धिनी ॥
खर्वा च खञ्जनद्वन्द्वलोचना खर्ववाहिनी ।
खड्गिनी खड्गहस्ता च खेचरी खड्गरूपिणी ॥ ३१
खगस्था खगरूपा च खगगा खगसम्भवा ।
खगधात्री खगानन्दा खगयोनिस्वरूपिणी ॥ ३२
खगेशी खेटककरा खगानन्दविवर्धिनी ।
खगमान्या खगाधारा खगगर्वविमोचनी ॥ ३३
गङ्गा गोदावरी गीतिर्गायत्री गगनालया ।

गीर्वाणसुन्दरी गौश्च गाथा गीर्वाणपूजिता ॥ ३४

गीर्वाणचर्चितपदा गान्धारी गोमती तथा ।

गर्विणी गर्वहन्त्री च गर्भस्था गर्भधारिणी ॥ ३५

गर्भदा गर्भहन्त्री च गन्धर्वकुलपूजिता ।

गया गौरीच गिरिजा गिरिस्था गिरिसम्भवा ॥ ३६

गिरिगह्वरमध्यस्था कुञ्जरेश्वरगामिनी ।

किरीटिनी च गदिनी गुञ्जाहारविभूषणा ॥ ३७

गणपा गणका गण्या गणकानन्दकारिणी ।

गणपूज्याच गीर्वाणा गणपानन्दवर्धिनी ॥ ३८

गुरुमाता गुरुरता गुरुभक्तिपरायणा ।
गोत्रा गौः कृष्णभगिनी कृष्णसूः कृष्णनन्दिनी ॥ ३९
गोवर्धनी गोत्रधरा गोवर्धनकृतालया ।
गोवर्धनधरा गोदा गौराङ्गी गौतमात्मजा ॥ ४०
घर्घरा घोररूपा च घोरा घर्घरनादिनी ।
श्यामा घनरवा घोरा घना घोरार्तिनाशिनी ॥ ४१
घनस्था च घनानन्दा दारिद्र्यघननाशिनी ।
चित्तज्ञा चिन्तितपदा चित्तस्था चित्तरूपिणी ॥ ४२

चक्रिणी चारुचम्पाभा चारुचम्पकमालिनी ।
चन्द्रिका चन्द्रकान्तिश्च चापिनी चन्द्रशेखरा ॥ ४३
चण्डिका चण्डदैत्यघ्नी चन्द्रशेखरवल्लभा ।
चाण्डालिनी च चामुण्डा चण्डमुण्डवधोद्यता ॥ ४४
चैतन्यभैरवी चण्डा चैतन्यघनगेहिनी ।
चित्स्वरूपा चिदाधारा चण्डवेगा चिदालया ॥ ४५
चन्द्रमण्डलमध्यस्था चन्द्रकोटिसुशीतला ।
चपला चन्द्रभगिनी चन्द्रकोटिनिभानना ॥ ४६
चिन्तामणिगुणाधारा चिन्तामणिविभूषणा ।

भक्तचिन्तामणिलता चिन्तामणिकृतालया ॥ ४७
चारुचन्दनलिप्ताङ्गी चतुरा च चतुर्मुखी ।
चैतन्यदा चिदानन्दा चारुचामरवीजिता ॥ ४८
छत्रदा छत्रधारी च छलच्छद्मविनाशिनी ।
छत्रहा छत्ररूपा च छत्रच्छाया कृतालया ॥ ४९
जगज्जीवा जगद्धात्री जगदानन्दकारिणी ।
यज्ञप्रिया यज्ञरता जपयज्ञपरायणा ॥ ५०
जननी जानकी यज्वा यज्ञहा यज्ञनन्दिनी ।

यज्ञदा यज्ञफलदा यज्ञस्थानकृतालया ॥ ५१
यज्ञभोक्त्री यज्ञरूपा यज्ञविघ्नविनाशिनी ।
जपाकुसुमसङ्काशा जपाकुसुमशोभिता ॥ ५२
जालन्धरी जया जैत्री जीमूतजयभाषिणी ।
जयदा जयरूपा च जयस्था जयकारिणी ॥ ५३
जगदीशप्रिया जीवा जलस्था जलजेक्षणा ।
जलरूपा जह्नुकन्या यमुना जलजोदरी ॥ ५४
जलजास्या जाह्नवी च जलजाभा जलोदरी ।
यदुवंशोद्भवा जीवा यादवानन्दकारिणी ॥ ५५

यशोदा यशसां राशिर्यशोदानन्दकारिणी ।
ज्वालिनी ज्वालिनी ज्वाला ज्वलत्पावकसन्निभा ॥ ५६
ज्वालामुखी जगन्माता यमलार्जुनभञ्जनी ।
जन्मदा जन्महा जन्मा जन्मभूर्जनकात्मजा ॥ ५७
जनानन्दा जाम्बवती जम्बूद्वीपकृतालया ।
जाम्बूनदसमानाभा जाम्बूनदविभूषणा ॥ ५८
जम्भहा जातिदा जातिर्ज्ञानदा ज्ञानगोचरा ।
ज्ञानहा ज्ञानरूपा च ज्ञानविज्ञानशालिनी ॥ ५९

जिनजैत्री जिनाधारा जिनमाता जिनेश्वरी ।
जितेन्द्रिया जनाधारा अजिनाम्बरधारिणी ॥ ६०
शम्भुकोटिदुराधर्षा विष्णुकोटिविमर्दिनी ।
समुद्रकोटिगम्भीरा वायुकोटिमहामला ॥ ६१
सूर्यकोटिप्रतीकाशा यमकोटिदुरापहा ।
कामधुक्कोटिफलदा शक्रकोटिसुराज्यदा ॥ ६२
कन्दर्पकोटिलावण्या पद्मकोटिनिभानना ।
पृथ्वीकोटिजनाधारा अग्निकोटिभयङ्करी ॥ ६३

अणिमा महिमा प्राप्तिर्गरिमा लघिमा तथा ।

प्राकाम्यदा वशकरी ईशिका सिद्धिदा तथा ॥ ६४
महिमादिगुणोपेता अणिमाद्यष्टसिद्धिदा ।
जवनघ्नी जनाधीना जामिनी च जरापहा ॥ ६५
तारिणी तारिकातारा तोतला तुलसीप्रिया ।
तन्त्रिणी तन्त्ररूपा च तन्त्रज्ञा तन्त्रधारिणी ॥ ६६
तारहारा च तुलजा डाकिनी तन्त्रगोचरा ।
त्रिपुरा त्रिदशा त्रिस्था त्रिपुरासुरघातिनी ॥ ६७
त्रिगुणा च त्रिकोणस्था त्रिमाता त्रितनुस्थिता ।

त्रैविद्या च त्रयी त्रिघ्नी तुरीया त्रिपुरेश्वरी ॥ ६८

त्रिकोदरस्था त्रिविधा त्रैलोक्या त्रिपुरात्मिका ।

त्रिधाम्नी त्रिदशाराध्या त्र्यक्षा त्रिपुरवासिनी ॥ ६९

त्रिवर्णा त्रिपदी तारा त्रिमूर्तिजननी त्वरा ।

त्रिदिवा त्रिदिवेशानी देवी त्रैलोक्यधारिणी ॥ ७०

त्रिमूर्तिश्च त्रिजननी त्रिभूस्त्रिपुरसुन्दरी ।

तपस्विनी तपोनिष्ठा तरुणी ताररूपिणी ॥ ७१

तामसी तापसी चैव तापघ्नी च तमोपहा ।



तरुणार्कप्रतीकाशा तप्तकाञ्चनसन्निभा ॥ ७२

उन्मादिनी तन्तुरूपा त्रैलोक्यव्यापिनीश्वरी ।
तार्किकी तर्कविद्या च तापत्रयविनाशिनी ॥ ७३

त्रिपुष्करा त्रिकालज्ञा त्रिसन्ध्या च त्रिलोचना ।
त्रिवर्गा च त्रिवर्गस्था तपस्सिद्धिदायिनी ॥ ७४

अधोक्षजा अयोध्या च अपर्णा च अवन्तिका ।
कारिका तीर्थरूपा च तीर्थतीर्थकरी तथा ॥ ७५

दारिद्र्यदुःखदलिनी अदीना दीनवत्सला ।
दीननाथप्रिया दीर्घा दयापूर्णा दयात्मिका ॥ ७६

देवदानवसंपूज्या देवानां प्रियकारिणी ।
दक्षपुत्री दक्षमाता दक्षयज्ञविनाशिनी ॥ ७७
देवसूर्दक्षिणा दक्षा दुर्गा दुर्गतिनाशिनी ।
देवकीगर्भसंभूता दुर्गदैत्यविनाशिनी ॥ ७८
अट्टाट्टहासिनी दोला दोला कर्माभिनन्दिनी ।
देवकी देविका देवी दुरितघ्नी तटित्तथा ॥ ७९
गण्डकी गल्लकी क्षिप्रा द्वारा द्वारवती तथा ।
आनन्दोदधिमध्यस्था कटिसूत्रैरलङ्कृता ॥ ८०
घोराग्निदाहदमनी दुःखदुस्वप्ननाशिनी ।

श्रीमयी श्रीमती श्रेष्ठा श्रीकरी श्रीविभावनी ॥ ८१
श्रीदा श्रीशा श्रीनिवासा श्रीमती श्रामती गतिः ।
धनदा दामिनी दान्ता धर्मदा धनशालिनी ॥ ८२
दाडिमीपुष्पसङ्काशा धनागारा धनञ्जया ।
धूम्राभा धूम्रदैत्यघ्नी धवला धवलप्रिया ॥ ८३
धूम्रवक्त्रा धूम्रनेत्रा धूम्रकेशी च धूसरा ।
धरणी धारणी धैर्या धरा धात्री च धैर्यदा ॥ ८४
दमिनी धार्मिणी धूश्च दया दोग्ध्री दुरासदा ।

नारायणी नारसिंही नृसिंहहृदयालया ॥ ८५
नागिनी नागकन्या च नागसूर्नागनायिका ।
नानारत्नविचित्राङ्गी नानाभरणमण्डिता ॥ ८६
दुर्गस्था दुर्गरूपा च दुःखदुष्कृतनाशिनी ।
ह्रीङ्कारी चैव श्रीङ्कारी हुङ्कारी क्लेशनाशिनी ॥ ८७
नगात्मजा नागरी च नवीना नूतनप्रिया ।
नीरजास्या नीरदाभा नवलावण्यसुन्दरी ॥ ८८
नीतिज्ञा नीतिदा नीतिर्निम्ननाभिर्नगेश्वरी ।
निष्ठा नित्या निरातङ्का [illegible] ॥ ८९

निषिद्धा निषिरूपा च निर्गुणा नरवाहिनी ।
नरमांसरता नारी नरमुण्डविभूषणा ॥ ९०
निराधारा निर्विकारा नुतिर्निर्वाणसुन्दरी ।
नरासृक्पानमत्ता च निर्वैरा नागगामिनी ॥ ९१
परमा प्रमिता प्राज्ञा पार्वती पर्वतात्मजा ।
पर्वप्रिया पर्वरता पर्वपावनपावनी ॥ ९२
परात्परतरा पूर्वा पश्चिमा पापनाशिनी ।
पशूनां पतिपत्नी च पतिभक्तिपरायणी ॥ ९३

परेशी पारगा पारा परञ्ज्योतिस्स्वरूपिणी ।
निष्ठुराक्रूरहृदया परासिद्धिः परागतिः ॥ १४

पशुघ्नी पशुरूपा च पशुहा पशुवाहिनी ।
पिता माता च यन्त्री च पशुपाशविनाशिनी ॥ १५

पद्मिनी पद्महस्ता च पद्मकिञ्जल्कवासिनी ।
पद्मवक्त्रा च पद्माक्षी पद्मस्था पद्मसंभवा ॥ १६

पद्मास्या पञ्चमी पूर्णा पूर्णपीठनिवासिनी ।
पद्मरागप्रतीकाशा पाञ्चाली पञ्चमप्रिया ॥ १७

परब्रह्मस्वरूपा च परब्रह्मनिवासिनी ।

परमानन्दमुदिता परचक्रविनाशिनी ॥ ९८
परेशी परमा पृथ्वी पीनतुङ्गपयोधरा ।
परावरा पराविद्या परमानन्ददायिनी ॥ ९९
पूजा प्रजावती पुष्टिः पिनाकी परिकीर्तिता ।
प्राणहा प्राणरूपा च प्राणदा च प्रियंवदा ॥ १००
फणिभूता फणावेशी फकाराकुण्ठमालिनी ।
फणिराड्वृतसंर्वाङ्गी फलभागनिवासिनी ॥ १०१
बलभद्रस्य भगिनी बाला बालप्रदायिनी ।

फल्गुरूपा प्रलम्बघ्नी फल्गूत्सवविनोदिनी ॥ १०२
भवानी भवपत्नी च भवभीतिहरा भवा ।
भवेश्वरी भवाराध्या भवेशी भवदायिका ॥ १०३
भवमाता भवागम्या भवकण्टकनाशिनी ।
भवप्रिया भवानन्दा भव्या च भवमोचनी ॥ १०४
भावनीया भगवती भवभारविनाशिनी ।
भूतधात्री च भूतेशी भूतस्था भूतरूपिणी ॥ १०५
भूतमाता च भूतघ्नी भूतपञ्चकवासिनी ।
भोगोपचारकुशला भिस्साधात्री च भूचरी ॥ १०६

भीतिघ्नी भक्तिगम्या च भक्तानामार्तिनाशिनी ।
भक्तानुकम्पिनी भीमा भगिनी भगनायिका ॥ १०७
भगविद्या भगक्लिन्ना भगयोनि र्भगप्रदा ।
भगेशी भगरूपा च भगगुह्या भगापहा ॥ १०८
भगोदरी भगानन्दा भाग्यदा भगमालिनी ।
भोगप्रदा भोगवासा भोगमूला च भोगिनी ॥ १०९
भेरुण्डा भेदिनी भीमा भद्रकाळी भिदोज्झिता ।
भैरवी भुवनेशानी भुवना भुवनेश्वरी ॥ ११०

भीमाक्षी भारती चैव भैरवाष्टकसेविता ।
भास्वरा भास्वती भीतिर्भास्वदुत्तानशालिनी ॥ १११
भागीरथी भोगवती भवघ्नी भुवनात्मिका ।
भूतिदा भूतिरूपा च भूतस्था भूतवर्धिनी ॥ ११२
माहेश्वरी महामाया महातेजा महासुरी ।
महाजिह्वा महालोला महादंष्ट्रा महाभुजा ॥ ११३
महामोहान्धकारघ्नी महामोक्षप्रदायिनी ।
महादारिद्र्यशमनी महाशत्रुविमर्दिनी ॥ ११४
महाशक्तिर्महाज्योतिर्महासुरविमर्दिनी ।

महाकाया महावीर्या महापातकनाशिनी ॥ ११५
महारवा मन्त्रमयी मणिपूरनिवासिनी ।
मानसी मानदा मान्या मनश्चक्षुरगोचरा ॥ ११६
माहेन्द्री मधुरा माया महिषासुरमर्दिनी ।
महाकुण्डलिनी शक्तिर्महाविभववर्धिनी ॥ ११७
मानसी माधवी मेधा मतिदा मतिधारिणी ।
मेनकागर्भसम्भूता मेनका भगिनी मतिः ॥ ११८
महोदरी मुक्तकेशी मुक्तिकामार्थसिद्धिदा ।

माहेशी महिषारूढा मधुदैत्यविमर्दिनी ॥ ११९
महाव्रता महामूर्धा महाभयविनाशिनी ।
मातङ्गी मत्तमातङ्गी मातङ्गकुलमण्डिता ॥ १२०.
महाधीरा माननीया मत्तमातङ्गगामिनी ।
मुक्ताहारलतोपेता मदघूर्णितलोचना ॥ १२१
महापराधराशिघ्नी महाचौरभयापहा ।
महाचिन्त्यस्वरूपा च मणिमन्त्रमहौषधी ॥ १२२
मणिमण्डपमध्यस्था मणिमालाविराजिता ।
मन्त्रात्मिका मन्त्रगम्या मन्त्रमाला सुमन्त्रिणी ॥ १२३

मेरुमन्दिरमध्यस्था मकराक्रांतिकुण्डला ।
मन्थरा च महासूक्ष्मा महादूती महेश्वरी ॥ १२४
मालिनी मानवी माध्वी मदरूपा मदोत्कटा ।
मदिरा मधुरा चैव मोदिनी च महोद्धता ॥ १२५
मङ्गलाङ्गी मधुमयी मधुपानपरायणा ।
मनोरमा रमामाता राजराजेश्वरी रमा ॥ १२६
राजमान्या राजपूज्या रक्तोत्पलविभूषणा ।
राजीवलोचना रामा राधिका रामवल्लभा ॥ १२७

शाकिनी डाकिनी चैव लावण्याम्बुधिवीचिका ।
रुद्राणी रुद्ररूपा च रौद्रा रुद्रार्तिनाशिनी ॥ १२८

रक्तप्रिया रक्तवस्त्रा रक्ताक्षी रक्तलोचना ।
रक्तकेशी रक्तदंष्ट्रा रक्तचन्दनचर्चिता ॥ १२९

रक्ताङ्गी रक्तभूषा च रक्तबीजनिपातिनी ।
रागादिदोषरहिता रतिजा रतिदायिनी ॥ १३०

विश्वेश्वरी विशालाक्षी विन्ध्यपीठनिवासिनी ।
विश्वभू वीरविद्या च वीरसू वीरनन्दिनी ॥ १३१


वीरेश्वरी विशालाक्षी विष्णुमाया विमोहिनी ।

विद्यार्वी विष्णुरूपा च विशालनयनोत्पला ॥ १३२
विष्णुमाता च विश्वात्मा विष्णुजायास्वरूपिणी ।
ब्रह्मेशी ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्मरूपिणी ॥ १३३
द्वारका विश्ववन्द्या च विश्वपाशविमोचनी ।
विश्वासकारिणी विश्वा विश्वशक्तिर्विचक्षणा ॥ १३४
बाणचापधरा वीरा बिन्दुस्था बिन्दुमालिनी ।
षट्चक्रभेदिनी षोढा षोडशारनिवासिनी ॥ १३५
शितिकण्ठप्रिया शान्ता शाकिनी वातरूपिणी ।

शाश्वती शम्भुवनिता शाम्भवी शिवरूपिणी ॥ १३६
शिवमाता च शिवदा शिवा शिवहृदासना ।
शुक्लाम्बरा शीतलाच शीलाशीलप्रदायिनी ॥ १३७
शिशुप्रिया वैद्यविद्या सालग्रामशिला शुचिः ।
हरिप्रिया हरमूर्ति हरिनेत्रकृतालया ॥ १३८
हरिवक्त्रोद्भवा हाला हरिवक्षःस्थलस्थिता ।
क्षेमङ्करी क्षितिक्षेत्रा क्षुधितस्य प्रपूरणी ॥ १३९
वैश्या च क्षत्रिया शूद्री क्षत्रियाणां कुलेश्वरी ।

हरपत्नी हराराध्या हरसूहररूपिणी ॥ १४०

सर्वानन्दमयी सिद्धि स्सर्वरक्षास्वरूपिणी ।
सर्वदुष्टप्रशमनी सर्वेप्सितफलप्रदा । १४१
सर्वसिद्धेश्वराराध्या सर्वमङ्गलमङ्गला ।
पुण्यं सहस्रनामेदं तव प्रीत्या प्रकाशितम् ॥ १४२
गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ।
नातः परतरं पुण्यं नातः परतरं तपः ॥ १४३
नातः परतरं स्तोत्रं नातः परतरा गतिः ।
स्तोत्रं नामसहस्राख्यं मम वक्त्राद्विनिर्गतम् ॥ १४४

यः पठेत्परया भक्त्या शृणुयाद्वा समाहितः ।
मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात् ॥ १४५
कामार्थी लभते कामं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः ॥ १४६
कन्यार्थी लभते कन्यां सुतार्थी लभते सुतान् ।
मूर्खोऽपि लभते शास्त्रं चोरोऽपि लभते गतिम् ॥ १४७
गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम् ।
संक्रान्त्यां च चतुर्दश्यामष्टम्यां च विशेषतः ॥ १४८
पौर्णमास्याममावास्यां नवम्यां भौमवासरे ।
पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ॥ १४९

समुक्तः सर्वपापेभ्यः कामेश्वरसमो भवेत् ।
लक्ष्मीवान् सुतवांश्चैव वल्लभः सर्वयोषिताम् ॥ १५०
तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम् ।
विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे ॥ १५१
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ।
क्षेत्रे च बहुसस्यं स्याद्गावश्च बहुदुग्धदाः ॥ १५२
नाशुभं नापदस्तस्य न भयं नृपशत्रुतः ।
जायते नाशुभा बुद्धिर्लभते कुलपूज्यताम् ॥ १५३

न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः ।
न पिशाचा न डाकिन्यो भूतभेतालडम्भकाः ॥ १५४
बालग्रहाभिभूतानां बालानां शान्तिकारकम् ।
द्वन्द्वानां प्रतिभेदे च मैत्रीकरणमुत्तमम् ॥ १५५
लोहपाशैर्दृढैर्बद्धो बन्दी वेश्मनि दुर्गमे ।
तिष्ठञ्छृण्वन्पठन्मर्त्यो मुच्यते नात्र संशयः ॥ १५६
पश्यन्ति नहि ते शोकं वियोगं चिरजीविनः ।
शृण्वती बद्धगर्भा च सुखं सैव प्रसूयते ॥ १५७
एकदा पठनादेव सर्वपापक्षयो भवेत् ।
[illegible] च महाघोरा दशावर्तनेन च ॥ १५८

शतधावर्तनेचैव वाचां सिद्धिः प्रजायते ।
नवरात्रे जिताहारो दृढबुद्धि र्जितेन्द्रियः ॥ १५९

अम्बिकायतने विद्वान् शुचिष्मान् मूर्तिसन्निधौ ।
एकाकी च दशावर्तं पठन्धीरश्च निर्भयः ॥ १६०

साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम् ।
सिद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये ॥ १६१

पठनात्साधकस्याशु सिद्धिर्भवति वाञ्छिता ।
दशावर्तं पठेन्नित्यं भूमिशायी नरः शुचिः ॥ १६२

स्वप्ने मूर्तिमयीं देवीं वरदां सोऽपि पश्यति ।
आवर्तनसहस्रैर्ये जपन्ति पुरुषोत्तमाः ॥ १६३
ते सिद्धा सिद्धिदा लोके शापानुग्रहणक्षमाः ।
प्रयच्छन्तश्च सर्वस्वं सेवन्ते तान्महीश्वराः ॥ १६४
भूर्जपत्रेऽष्टगन्धेन लिखित्वा तु शुभे दिने ।
धारयेद्यन्त्रितं शीर्षे पूजयित्वा कुमारिकाम् ॥ १६५
ब्राह्मणान् वरनारीश्च धूपैः कुसुमचन्दनैः ।
क्षीरखण्डादिभोज्यांश्च भोजयित्वा सुभक्तितः ॥ १.६६
बध्नन्ति ये महारक्षां बालानां च विशेषतः ।

रुद्रं दृष्ट्वा यथा देवं विष्णुं दृष्ट्वा च दानवाः ॥ १६७

पन्नगा गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः ।
मण्डूका भोगिनं दृष्ट्वा मार्जारं मूषिकास्तथा ॥ १६८
विघ्नभूताः पलायन्ते यस्य वक्त्रविलोकनात् ।
अग्निचोरभयं तस्य कदाचिन्नैव सम्भवेत् ॥ १६९
पातकान्विविधान्सोऽपि मेरुमन्दरसन्निभान् ।
भस्मितान्कुरुते क्षिप्रं तृणं वह्निहुतं यथा ॥ १७०
नृपाश्च वश्यतां यान्ति नृपपूज्याश्च ते नराः ।
महार्णवे महानद्यां पोतस्थे च न भीः क्वचित् ॥ १७१

रणे द्यूते विवादे च विजयं प्राप्नुवन्ति ते ।
सर्वत्र पूजितो लोकैर्बहुमानपुरस्सरैः ॥ १७२
रतिरागविवृद्धाश्च विह्वलाः कामपीडिताः ।
यौवनाक्रान्तदेहास्तान् श्रयन्ते वामलोचनाः ॥ १७३
सहस्रं जपते यस्तु खेचरो जायते नरः ।
सहस्रदशकं देवि यः पठेद्भक्तिमान्नरः ॥ १७४
सा तस्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम् ।
लक्षं पूर्णं यदा देवी स्तोत्रराजं जपेत्सुधीः ॥ १७५
भवपाशविनिर्मुक्तो मम तुल्यो न संशयः ।
सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥ १७६

सर्वधर्मेषु यज्ञेषु सर्वदानेषु यत्फलम् ।
सर्ववेदेषु प्रोक्तेषु यत्फलं परिकीर्तितम् ॥ १७७

तत्पुण्यं कोटिगुणितं सकृज्जप्त्वा लभेन्नरः ।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ १७८

सयास्यति न सन्देहस्स्तवराजस्य कीर्तनात् ॥

इति श्रीरुद्रयामळे उत्तरखण्डे भवानीश्वरसंवादे
अन्नपूर्णासहस्रनामस्तोत्रं समाप्तम् ॥

---

॥ श्रीः ॥

# ॥ अन्नपूर्णासहस्रनामावळिः ॥

ओं अन्नपूर्णायै नमः
अन्नदात्र्यै
अन्नराशिकृतालयायै
अन्नदायै
अन्नरूपायै

ओं अन्नदानरतोत्सवायै नमः
अनन्तायै
अनन्ताक्ष्यै
अनन्तगुणशालिन्यै
अच्युतायै १०

ओं अच्युतप्राणायै नमः
अच्युतानन्दकारिण्यै
अव्यक्तायै
अनन्तमहिमायै
अनन्तस्य कुलेश्वर्यै
अब्धिस्थायै
अब्धिशयनायै
अब्धिजायै

ओं अब्धिनन्दिन्यै नमः
अब्जस्थायै २०
अब्जनिलयायै
अब्जजायै
अब्जभूषणायै
अब्जाभायै
अब्जहस्तायै
अब्जपत्त्रशुभेक्षणायै

अब्जाननायै

अनन्तात्मने

अग्निस्थायै

अग्निरूपिण्यै ३०

अग्निजायायै

अग्निमुख्यै

अग्निकुण्डकृतालयायै

अक्षरायै

अग्निमात्रे

अजयायै

अदितिनन्दिन्यै

आद्यायै

आदित्यसङ्काशायै

आत्मज्ञायै ४०

आत्मगोचरायै

आत्मसुवे

आत्मदयितायै

आधारायै

ओं आत्मरूपिण्यै नमः
आशायै
आकाशपद्मस्थायै
अवकाशस्वरूपिण्यै
आशापूर्यै
अगाधायै ५०
अणिमादिसुसेवितायै
अम्बिकायै

ओं अबलायै नमः
अम्बायै
अनाद्यायै
अयोनिजायै
अनीशायै
ईशिकायै
ईशायै
ईशान्यै ६०

ईश्वरप्रियायै
ईश्वर्यै
ईश्वरप्राणायै
ईश्वरानन्ददायिन्यै
इन्द्राण्यै
इन्द्रदयितायै
इन्द्रसुवे
इन्द्रपालिन्यै
इन्दिरायै

इन्द्रभगिन्यै ७०.
इन्द्रियायै
इन्दुभूषणायै
इन्दुमात्रे
इन्दुमुख्यै
इन्द्रियाणां वशंकर्यै
उमायै
उमापतेः प्राणायै
ओड्याणपीठवासिन्यै

ओं उत्तरज्ञायै नमः
उत्तराख्यायै
उकारायै
उत्तरात्मिकायै
ऋमात्रे
ऋभवायै
ऋस्थायै
ऋलकारस्वरूपिण्यै

ओं ऋकारायै नमः
८० लकारायै
लृतकप्रीतिदायिन्यै
एकायै ९०
एकवीरायै
एकारैकाररूपिण्यै
ओकारायै
ओघरूपायै

ओघत्रयसुपूजितायै
ओघस्थायै
ओघसंभूतायै
ओघधात्र्यै
ओघसुवे
षोडशस्वरसंभूतायै 100
षोडशस्वररूपिण्यै
वर्णात्मने
वर्णनिलयायै
शूलिन्यै
वर्णमालिन्यै
कालरात्र्यै
महारात्र्यै
मोहरात्र्यै
सुलोचनायै
काल्यै 110
कपालिन्यै
कृत्यायै

ओं कालिकायै नमः
सिंहगामिन्यै
कात्यायन्यै
कलाधारायै
कालदैत्यनिकृन्तन्यै
कामिन्यै
कामवन्द्यायै
कमनीयायै १२०

ओं विनोदिन्यै नमः
कामसुवे
कामवनितायै
कामधुरे
कमलावत्यै
कामदात्र्यै
कराल्यै
कामकेलिविनोदिन्यै

ओघत्रयसुपूजितायै
ओघस्थायै
ओघसंभूतायै
ओघधात्र्यै
ओघसुवे
षोडशस्वरसंभूतायै १००
षोडशस्वररूपिण्यै
वर्णात्मने
वर्णनिलयायै

शूलिन्यै
वर्णमालिन्यै
कालरात्र्यै
महारात्र्यै
मोहरात्र्यै
सुलोचनायै
काल्यै ११०
कपालिन्यै
कृत्यायै

ओं कराळाक्ष्यै नमः
किशोर्यै
कलापिन्यै
कलायै १५०
काष्ठायै
निमेषायै
कालस्थायै
कालरूपिण्यै

ओं कालज्ञायै नमः
कालमात्रे
कालधात्र्यै
कलावन्त्यै
कलादायै
कालघ्न्यै १६०
कुल्यायै
कुरुकुल्लायै

कुलाङ्गनायै
कीर्तिदायै
कीर्तिघ्न्यै
कीर्त्यै
कीर्तिस्थायै
कीर्तिवर्धन्यै
कीर्तिज्ञायै
कीर्तिपदायै १७०
कृत्तिकायै

केशवप्रियायै
केशिघ्न्यै
केळिकायै
केशवानन्दकारिण्यै
कुमुदाभायै
कुमार्यै
कर्मदायै
कमलेक्षणायै
कौमुद्यै १८०

ओं कुमुदानन्दायै नमः
कौळिन्यै
कुमुद्वत्यै
कोदण्डधारिण्यै
क्रोधायै
कूटस्थायै
कोटराश्रयायै
काळकण्ठ्यै
ओं कराळाङ्ग्यै नमः
कालाङ्ग्यै १९०
कालभूषणायै
कङ्काळ्यै
कामदामायै
कङ्काळकृतभूषणायै
कपालकर्तृककरायै
करवीरस्वरूपिण्यै

कपर्दिन्यै
कोमलाङ्ग्यै
कृपासिन्धवे
कृपामय्यै २००
कुशावत्यै
कुण्डसंस्थायै
कौबेर्यै
कौशिक्यै
काश्यप्यै

कद्रुतनयायै
कलिकल्मषनाशिन्यै
कञ्जस्थायै
कञ्जवदनायै
कञ्जकिञ्जल्कचर्चितायै २१०
कञ्जाभायै
कञ्जमध्यस्थायै
कञ्जनेत्रायै
कचोद्भवायै

ओं कामरूपायै नमः
ह्रींकार्यै
कश्यपान्वयवर्धिन्यै
खर्वायै
खञ्जनद्वन्द्वलोचनायै
खर्ववाहिन्यै २२०
खङ्गिन्यै
खड्गहस्तायै
ओं खेचर्यै नमः
खड्गरूपिण्यै
खगस्थायै
खगरूपायै
खगगायै
खगसम्भवायै
खगधात्र्यै
खगानन्दायै २३०

खगयोनिस्वरूपिण्यै २४०
खगेश्यै
खेटककरायै
खगानन्दविवर्धिन्यै
खगमान्यायै
खगाधारायै
खगगर्वविमोचन्यै
गङ्गायै
गोदावर्यै

गीत्यै
गायत्र्यै
गगनाल्यायै
गीर्वाणसुन्दर्यै
गवे
गाधायै
गीर्वाणपूजितायै
गीर्वाणचर्चितपदायै
गान्धार्यै

ओं गोमत्यै नमः
गर्विण्यै
गर्वहन्त्र्यै
गर्भस्थायै
गर्भधारिण्यै
गर्भदायै
गर्भहन्त्र्यै
गन्धर्वकुलपूजितायै

ओं गयायै नमः
२५० गौर्यै
गिरिजायै
गिरिस्थायै २६०
गिरिसम्भवायै
गिरिगह्वरमध्यस्थायै
कुञ्जरेश्वरगामिन्यै
किरीटिन्यै

गान्दिन्यै
गुञ्जाहारविभूषणायै
गणपायै
गणकायै
गण्यायै
गणकानन्दकारिण्यै २७०
गणपूज्यायै
गीर्वाणायै
गणपानन्दवर्धिन्यै

गुरुमात्रे
गुरुरतायै
गुरुभक्तिपरायणायै
गोत्रायै
गवे
कृष्णभगिन्यै
कृष्णसुवे २८०
कृष्णनन्दिन्यै
गोवर्धन्यै

ओं गोत्रधरायै नमः
गोवर्धनकृतालयायै
गोवर्धनधरायै
गोदायै
गौराङ्ग्यै
गौतमात्मजायै
घर्घरायै
घोररूपायै २९०

ओं घोरायै नमः
घर्घरनादिन्यै
श्यामायै
घनरवायै
अघोरायै
घनायै
घोरार्तिनाशिन्यै
घनस्थायै

घनानन्दायै

दारिद्र्यघननाशिन्यै ३००

चित्तज्ञायै

चिन्तितपदायै

चित्तस्थायै

चित्तरूपिण्यै

चक्रिण्यै

चारुचम्पाभायै

चारुचम्पकमालिन्यै

चन्द्रिकायै

चन्द्रकान्त्यै

चापिन्यै ३१०

चन्द्रशेखरायै

चण्डिकायै

चण्डदैत्यघ्न्यै

चन्द्रशेखरवल्लभायै

चाण्डालिन्यै

चामुण्डायै

ओं चण्डमुण्डवधोद्यतायै नमः
चैतन्यभैरव्यै
चण्डायै
चैतन्यघनगेहिन्यै ३२०
चित्स्वरूपायै
चिदाधारायै
चण्डवेगायै
चिदालयायै

ओं चन्द्रमण्डलमध्यस्थायै नमः
चन्द्रकोटिसुशीतलायै
चपलायै
चन्द्रभगिन्यै
चन्द्रकोटिनिभाननायै
चिन्तामणिगुणाधारायै ३३०
चिन्तामणिविभूषणायै
भक्तचिन्तामणिलतायै

चिन्तामणिकृतालयायै
चारुचन्दनलिप्ताङ्ग्यै
चतुरायै
चतुर्मुख्यै
चैतन्यदायै
चिदानन्दायै
चारुचामरवीजितायै
छत्रदायै ·४०
छत्रधार्यै

छलच्छद्मविनाशिन्यै
छत्रघ्न्यै
छत्ररूपायै
छत्रच्छायाकृतालयायै
जगज्जीवायै
जगद्धात्र्यै
जगदानन्दकारिण्यै
यज्ञप्रियायै
यज्ञरतायै ५०

ओं जपयज्ञपरायणायै नमः
जनन्यै
जानक्यै
यज्वने
यज्ञ्यै
यज्ञनन्दिन्यै
यज्ञदायै
यज्ञफलदायै

ओं यज्ञस्थानकृतालयायै नमः
यज्ञभोक्त्र्यै ३६०
यज्ञरूपायै
यज्ञविघ्नविनाशिन्यै
जपाकुसुमसङ्काशायै
जपाकुसुमशोभितायै
जालंधर्यै
जयायै

जैत्र्यै — जलजेक्षणायै
जीमूतचयभाषिण्यै — जलरूपायै
जयदायै — जह्नुकन्यायै
जयरूपायै ३७० — यमुनायै
जयस्थायै — जलजोदर्यै ३८०
जयकारिण्यै — जलजास्यायै
जगदीशप्रियायै — जाह्नव्यै
जीवायै — जलजाभायै
जलस्थायै — जलोदर्यै

ओं यदुवंशोद्भवायै नमः
जीवायै
यादवानन्दकारिण्यै
यशोदायै
यशसांराशये
यशोदानन्दकारिण्यै ३९०
ज्वलिन्यै
ज्वालिन्यै
ओं ज्वालायै नमः
ज्वलत्पावकसन्निभायै
ज्वालामुख्यै
जगन्मात्रे
यमळार्जुनभञ्जन्यै
जन्मदायै
जन्मह्न्यै
जन्मायै ४००

जन्मभुवे
जनकात्मजायै
जनानन्दायै
जाम्बवत्यै
जम्बूद्वीपकृतालयायै
जाम्बूनदसमानाभायै
जाम्बूनदविभूषणायै
जम्भघ्न्यै
जातिदायै

जात्यै ४१०
ज्ञानदायै
ज्ञानगोचरायै
ज्ञानघ्न्यै
ज्ञानरूपायै
ज्ञानविज्ञानशालिन्यै
जिनजैत्र्यै
जिनाधारायै
जितमात्रे

ओं जिनेश्वर्यै नमः
जितेन्द्रियायै ४२०
जनाधारायै
अजिनाम्बरधारिण्यै
शम्भुकोटिदुराधर्षायै
विष्णुकोटिविमर्दिन्यै
समुद्रकोटिगम्भीरायै
वायुकोटिमहाबलायै

ओं सूर्यकोटिप्रतीकाशायै
यमकोटिदुरापन्न्यै
कामधुक्कोटिफलदायै
शक्रकोटिसुराज्यदायै ४३०
कन्दर्पकोटिलावण्यायै
पद्मकोटिनिभाननायै
पृथ्वीकोटिजनाधारायै
अग्निकोटिभयङ्कर्यै

अणिम्ने
महिम्ने
प्राप्त्यै
गरिम्ने
लघिम्ने
प्राकाम्यदायै 440
वशङ्कर्यै
ईशिकायै
सिद्धिदायै

महिमादिगुणोपेतायै
अणिमाद्यष्टसिद्धिदायै
जवनघ्न्यै
जनाधीनायै
जामिन्यै
जरापहायै
तारिण्यै 450
तारिकायै
तारायै

ओं तोतळायै नमः
तुळसीप्रियायै
तान्त्रिण्यै
तन्त्ररूपायै
तन्त्रज्ञायै
तन्त्रधारिण्यै
तारहारायै
तुळजायै ४६०

ओं डाकिनीतन्त्रगोचरायै नमः
त्रिपुरायै
त्रिदशायै
त्रिस्थायै
त्रिपुरासुरघातिन्यै
त्रिगुणायै
त्रिकोणस्थायै
त्रिमात्रायै

त्रितनुस्थितायै

त्रैविद्यायै ४७०

त्रय्यै

त्रिघ्न्यै

तुरीयायै

त्रिपुरेश्वर्यै

त्रिकोदरस्थायै

त्रिविधायै

त्रैलोक्यायै

त्रिपुरात्मिकायै

त्रिधाम्ने

त्रिदशाराध्यायै ४८०

त्र्यक्षायै

त्रिपुरवासिन्यै

त्रिवर्णायै

त्रिपद्यै

तारायै

त्रिमूर्तिजनन्यै

ओं त्वरायै नमः
त्रिदिवायै
त्रिदिवेशान्यै
देव्यै ४९०
त्रैलोक्यधारिण्यै
त्रिमूर्त्यैं
त्रिजनन्यैं
त्रिभुवे

ओं त्रिपुरसुन्दर्यैं नमः
तपस्विन्यै
तपोनिष्ठायै
तरुण्यै
ताररूपिण्यै
तामस्यै ५००
तापस्यै
तापघ्न्यै

तमोपहायै
तरुणार्कप्रतीकाशायै
तप्तकाञ्चनसन्निभायै
उन्मादिन्यै
तन्तुरूपायै
त्रैलोक्यव्यापिन्यै
ईश्वर्यै
तार्किक्यै ५१०
तर्कविद्यायै

तापत्रयविनाशिन्यै
त्रिपुष्करायै
त्रिकालज्ञायै
त्रिसन्ध्यायै
त्रिलोचनायै
त्रिवर्गायै
त्रिवर्गस्थायै
तपस्सिद्धिदायिन्यै
अधोक्षजायै ५२०

ओं अयोध्यायै नमः
अपर्णायै
अवन्तिकायै
कारिकायै
तीर्थायै
तीर्थायै
तीर्थकर्यै
दारिद्र्यदुःखदलिन्यै

ओं अदीनायै नमः
दीनवत्सलायै ५३०
दीननाथप्रियायै
दीर्घायै
दयापूर्णायै
दयात्मिकायै
देवदानवसम्पूज्यायै
देवानां प्रियकारिण्यै

दक्षपुत्र्यै
दक्षमात्रे
दक्षयज्ञविनाशिन्यै
देवसुवे ५४०
दक्षिणायै
दक्षायै
दुर्गायै
दुर्गतिनाशिन्यै
देवकीगर्भसम्भूतायै
दुर्गदैत्यविनाशिन्यै
अट्टायै
अट्टहासिन्यै
दोलायै
दोलाकर्माभिनन्दिन्यै ५५०
देवक्यै
देविकायै
देव्यै
दुरितघ्न्यै

ओं तटित्ते नमः
गण्डक्यै
गलक्यै
क्षिप्रायै
द्वारायै
द्वारवत्यै ५६०
आनन्दोदधिमध्यस्थायै
कटिसूत्रैरलङ्कृतायै

ओं घोराग्निदाहदमन्यै नमः
दुःखदुस्स्वप्ननाशिन्यै
श्रीमय्यै
श्रीमत्यै
श्रेष्ठायै
श्रीकर्यै
श्रीविभावन्यै
श्रीदायै ५७०

श्रीशायै
श्रीनिवासायै
श्रीमत्यै
श्रियै
मत्यै
गतये
धनदायै
दामिन्यै
दान्तायै

धर्मदायै ५८०
धनशालिन्यै
दाडिमीपुष्पसङ्काशायै
धनागारायै
धनञ्जयायै
धूम्राभायै
धूम्रदैत्यघ्न्यै
धवळायै
धवळाक्षियायै

ओं धूम्रवक्त्रायै नमः
धूम्रनेत्रायै ५९०
धूम्रकेश्यै
धूसरायै
धरण्यै
धारिण्यै
धैर्यायै
धरायै

ओं धान्यै नमः
धैर्यदायै
दमिन्यै
धार्मिण्यै ६००
धुरं
दयायै
दोग्ध्र्यै
दुरासदायै

नारायण्यै
नारसिंह्यै
नृसिंहहृदयालयायै
नागिन्यै
नागकन्यायै
नागसुवे ६१०
नागनायिकायै
नानारत्नविचित्रांग्यै
नानाभरणमण्डितायै

दुर्गस्थायै
दुर्गरूपायै
दुःखदुष्कृतनाशिन्यै
ह्रीङ्कार्यै
श्रीङ्कार्यै
हुङ्कार्यै
क्लेशनाशिन्यै ६२०
नगात्मजायै
नागायै

ओं नवीनायै नमः
नूतनप्रियायै
नीरजास्यायै
नीरदाभायै
नवलावण्यसुन्दर्यै
नीतिज्ञायै
नीतिदायै
नीत्यै ६६०

ओं निम्ननाभ्यै नमः
नगेश्वर्यै
निष्ठायै
नित्यायै
निरातङ्कायै
नागयज्ञोपवीतिन्यै
निधिदायै
निर्लेपायै

निर्गुणायै
नरवाहिन्यै ६४०
नरमांसरतायै
नार्यै
नरमुण्डविभूषणायै
निराधारायै
निर्विकारायै
नुत्यै
निर्वाणसुन्दर्यै
नरासृक्पानमत्तायै
निर्वैरायै
नागगामिन्यै ६५०
परमायै
प्रमितायै
प्राज्ञायै
पार्वत्यै
पर्वतात्मजायै
पर्वप्रियायै

ओं पर्वरतायै नमः
पर्वगे
पावनपावन्यै
परात्परतरायै ६६०
पूर्वायै
पश्चिमायै
पापनाशिन्यै
पशूनांपतिपत्न्यै

ओं पतिभक्तिपरायण्यै नमः
परेश्यै
पारगायै
परायै
परंज्योतिस्वरूपिण्यै
निष्ठुरायै ६७०
क्रूरहृदयायै
परासिद्धये

परागत्यै
पशुघ्न्यै
पशुरूपायै
पशुघ्न्यै
पशुवाहिन्यै
पित्रे
मात्रे
यन्त्र्यै ६८०
पशुपाशविनाशिन्यै

पद्मिन्यै
पद्महस्तायै
पद्मकिञ्जल्कवासिन्यै
पद्मवक्त्रायै
पद्माक्ष्यै
पद्मस्थायै
पद्मसम्भवायै
पद्मास्यायै
पद्मन्यै ६९०

ओं पूर्णायै नमः
पूर्णपीठनिवासिन्यै
पद्मरागप्रतीकाशायै
पाञ्चाल्यै
पञ्चमप्रियायै
परब्रह्मस्वरूपायै
परब्रह्मवासिन्यै
परमानन्दमुदितायै

ओं परचक्रविनाशिन्यै नमः
परेश्यै 700
परमायै
पृथ्व्यै
पीनतुङ्गपयोधरायै
परावरायै
परायै
विंदायै

परमानन्ददायिन्यै
पूजायै
प्रजावत्यै
पुष्ट्यै ७१०
पिनाकिपरिकीर्तितायै
प्राणघ्न्यै
प्राणरूपायै
प्राणदायै
प्रियंवदायै

फणिभूतायै
फणावेश्यै
फकाराकुण्ठमालिन्यै
फणिराड्वृतसर्वाङ्ग्यै
फलभागनिवासिन्यै ७२०
बलभद्रस्यभगिन्यै
बालायै
बलप्रदायिन्यै
फल्गुरूपायै

ओं प्रलम्बघ्न्यै नमः
फल्गूत्सवविनोदिन्यै
भवान्यै
भवपत्न्यै
भवभीतिहरायै
भवायै ७३०
भवेश्वर्यै
भवाराध्यायै

ओं भवेश्यै नमः
भवदायिकायै
भवमात्रे
भवागम्यायै
भवकण्टकनाशिन्यै
भवप्रियायै
भवानन्दायै
भव्यायै ७४०

भवमोचन्यै
भावनीयायै
भगवत्यै
भवभारविनाशिन्यै
भूतधात्र्यै
भूतेश्यै
भूतस्थायै
भूतरूपिण्यै
भूतमात्रे

भूतघ्न्यै
भूतपञ्चकवासिन्यै
भोगोपचारकुशलायै
भिस्साधात्र्यै
भूचर्यै
भीतिघ्न्यै
भक्तिगम्यायै
भक्तानामार्तिनाशिन्यै
भक्तानुकम्पिन्यै

ओं भीमायै नमः
भगिन्यै
भगनायिकायै
भगविद्यायै
भगक्लिन्नायै
भगयोन्यै
भगप्रदायै
भगेश्यै

ओं भगरूपायै नमः
७६० भगगुह्यायै
भगापहायै
भगोदर्यै ७७०
भगानन्दायै
भाग्यदायै
भगमालिन्यै
भोगप्रदायै

भोगवासस्से
भोगमूलायै
भोगिन्यै
भेरुण्डायै
भेदिन्यै
भीमायै ७८०
भद्रकाल्यै
भिदोज्झितायै
भैरव्यै

भुवनेशान्यै
भुवनायै
भुवनेश्वर्यै
भीमाक्ष्यै
भारत्यै
भैरवाष्टकसेवितायै
भास्वरायै ७९०
भास्वत्यै
भीत्यै

ओं भास्वदुत्तानशालिन्यै
भागीरथ्यै
भोगवत्यै
भवघ्न्यै
भुवनात्मिकायै
भूतिदायै
भूतिरूपायै
भूतस्थायै ८००

ओं भूतवर्धिन्यै नमः
माहेश्वर्यै
महामायायै
महातेजसे
महासुर्यै
महाजिह्वायै
महालोलायै
महादंष्ट्रायै

महाभुजायै
महामोहान्धकारघ्न्यै ८१०
महामोक्षप्रदायिन्यै
महादारिद्र्यशमन्यै
महाशत्रुविमर्दिन्यै
महाशक्त्यै
महाज्योतिषे
महासुरविमर्दिन्यै
महाकायायै
महावीर्यायै
महापातकनाशिन्यै
महारवायै ८२०
मन्त्रमय्यै
मणिपूरनिवासिन्यै
मानस्यै
मानदायै
मान्यायै
मनश्चक्षुरगोचरायै

ओं माहेन्द्र्यै ममः
मधुरायै
मायायै
महिषासुरमर्दिन्यैं ८३०
महाकुण्डलिन्यै
शक्त्यै
महाविभववर्धिन्यै
मानस्यै
ओं माधव्यै नमः
मेधायै
मतिदायै
मतिधारिण्यैं
मेनकागर्भसम्भूतायै
मेनकाभगिन्यै ८४०
मतयें
महोदर्यै

मुक्तकेश्यै
मुक्तिकाम्यार्थसिद्धिदायै
माहेश्यै
महिषारूढायै
मधुदैत्यविमर्दिन्यै
महाव्रतायै
महामूर्धायै
महाभयविनाशिन्यै ८५०
मातङ्ग्यै

मत्तमातङ्ग्यै
मातङ्गकुलमण्डितायै
महाघोरायै
माननीयायै
मत्तमातङ्गगामिन्यै
मुक्ताहारलतोपेतायै
मदघूर्णितलोचनायै
महापराधराशिघ्न्यै
महाचोरभयापहायै ८६०

ओं महाचिन्त्यस्वरूपायै नमः
मणिमन्त्रमहौषध्यै
मणिमण्डपमध्यस्थायै
मणिमालाविराजितायै
मन्त्रात्मिकायै
मन्त्रगम्यायै
मन्त्रमात्रे
सुमन्त्रिण्यै

ओं मेरुमन्दिरमध्यस्थायै नमः
मकराकृतिकुण्डलायै ८७०
मन्थरायै
महासूक्ष्मायै
महादूत्यै
महेश्वर्यै
मालिन्यै
मानस्यै

माध्व्यै
मदरूपायै
मदोत्कटायै
मदिरायै ८८०
मधुरायै
मोदिन्यै
महोद्धतायै
मङ्गलाङ्ग्यै
मधुमत्यै

मधुपानपरायणायै
मनोरमायै
रमामात्रे
राजराजेश्वर्यै
रमायै ८९०
राजमान्यायै
राजपूज्यायै
रक्तोत्पलविभूषणायै
राजीवलोचनायै

ओं रामायै ननः
राधिकायै
रामवल्लभायै
शाकिन्यै
डाकिन्यै
लावण्याम्बुधिवीचिकायै ९००
रुद्राण्यै
रुद्ररूपायै

ओं रौद्रायै नमः
रुद्रार्तिनाशिन्यै
रक्तप्रियायै
रक्तवस्त्रायै
रक्ताक्ष्यै
रक्तलोचनायै
रक्तकेश्यै
रक्तदंष्ट्रायै ९१०

रक्तचन्दनचर्चितायै

रक्ताङ्ग्यै

रक्तभूषायै

रक्तबीजनिपातिन्यै

रागादिदोषरहितायै

रतिजायै

रतिदायिन्यै

विश्वेश्वर्यै

विशालाक्ष्यै

विन्ध्यपीठनिवासिन्यै १२०

विश्वभुवे

वीरविद्यायै

वीरसुवे

वीरनन्दिन्यै

वीरेश्वर्यै

विशालाक्ष्यै

विष्णुमायाविमोहिन्यै

विद्यायै

ओं विष्णुरूपायै नमः
विशालनयनोत्पलायै १३०
विष्णुमात्रे
विश्वात्मने
विष्णुजायास्वरूपिण्यै
ब्रह्मेश्यै
ब्रह्मदायै
ब्राह्म्यै

ओं ब्रह्माण्यै नमः
ब्रह्मरूपिण्यै
ब्रह्मेश्यै
द्वारकायै १४०
विश्ववन्द्यायै
विश्वपाशविमोचन्यै
विश्वासकारिण्यै
विश्वायै

विश्वशक्त्यै
विचक्षणायै
बाणचापधरायै
वीरायै
बिन्दुस्थायै
बिन्दुमालिन्यै ९५०
षट्चक्रभेदिन्यै
षोढायै
षोडशारनिवासिन्यै

शितिकण्ठप्रियायै
शान्तायै
शाकिन्यै
वातरूपिण्यै
शाश्वत्यै
शम्भुवनितायै
शाम्भव्यै ९६०
शिवरूपिण्यै
शिवमात्रे

ओं शिवदायै नमः
शिवायै
शिवहृदासनायै
शुक्लाम्बरायै
शीतलायै
शीलायै
शीलप्रदायिन्यै
शिशुप्रियायै ९००

ओं वैद्यविद्यायै नमः
सालग्रामशिलायै
शुच्यै
हरिप्रियायै
हरमूर्त्यै
हरिनेत्रकृतालयायै
हरिवक्त्रोद्भवायै
हालायै

हरिवक्षस्स्थलस्थितायै
क्षेमङ्कर्यै १८०
क्षित्यै
क्षेत्रायै
क्षुधितस्यप्रपूरण्यै
वैश्यायै
क्षत्रियायै
शूद्र्यै
क्षत्रियाणाङ्कुलेश्वर्यै

हरपत्न्यै
हराराध्यायै
हरसुवे १९०
हररूपिण्यै
सर्वायै
आनन्दमय्यै
सिद्धये
सर्वरक्षास्वरूपिण्यै
सर्वदुष्टप्रशमन्यै

अन्नपूर्णासहस्रनामावळिः १०८

ओं सर्वाभिसितफलप्रदायै नमः ओं सर्वमङ्गळमङ्गळायै १०००
सर्वासिद्धेश्वराराध्यायै

श्री अन्नपूर्णेश्वर्यै नमः

श्री अन्नपूर्णासहस्रनामावळिः

समाप्ता ॥

॥ श्रीः ॥

# ॥ अन्नपूर्णाष्टोत्तरशतनामस्तोत्रम् ॥

अस्य श्री अन्नपूर्णाष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप्छन्दः, श्रीअन्नपूर्णेश्वरी देवता, स्वधा बीजं, स्वाहा शक्तिः, ओं कीलकं, मम सर्वाभीष्टप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

ओं अन्नपूर्णा शिवा देवी भीमा पुष्टिः सरस्वती ।

सर्वज्ञा पार्वती दुर्गा शर्वाणी शिववल्लभा ॥ १
वेदवेद्या महाविद्या विद्यादात्री विशारदा ।
कुमारी त्रिपुरा बाला लक्ष्मीश्श्रीर्भयहारिणी ॥ २
भवानी विष्णुजननी ब्रह्मादिजननी तथा ।
गणेशजननी शक्तिः कुमारजननी शुभा ॥ ३
भोगप्रदा भगवती भक्ताभीष्टप्रदायिनी ।
भवरोगहरा भव्या शुभ्रा परममङ्गला ॥ ४
भवानी चञ्चला गौरी चारुचन्द्रकलाधरा ।

विशालाक्षी विश्वमाता विश्ववन्द्या विलासिनी ॥ ५
आर्या कल्याणनिलया रुद्राणी कमलासना ।
शुभप्रदा शुभावर्ता वृत्तपीनपयोधरा ॥ ६
अम्बा संहारमथनी मृडानी सर्वमङ्गला ।
विष्णुसंसेविता सिद्धा ब्रह्माणीसुरसेविता ॥ ७
परमानन्ददा शान्तिः परमानन्दरूपिणी ।
परमानन्दजननी परानन्दप्रदायिनी ॥ ८
परोपकारनिरता परमाभक्तवत्सला ।
पूर्णचन्द्राभवदना पूर्णचन्द्रनिभांशुका ॥ ९

शुभलक्षणसम्पन्ना शुभानन्दगुणार्णवा ।
शुभसौभाग्यनिलया शुभदा च रतिप्रिया ॥ १०
चण्डिका चण्डमथनी चण्डदर्पनिवारिणी ।
मार्तण्डनयना साध्वी चन्द्राग्निनयना सती ॥ ११
पुण्डरीकहरा पूर्णा पुण्यदा पुण्यरूपिणी ।
मायातीता श्रेष्ठमाया श्रेष्ठधर्मात्मवन्दिता ॥ १२
असृष्टिस्सङ्गरहिता सृष्टिहेतुः कपर्दिनी ।
वृषारूढा शूलहस्ता स्थितिसंहारकारिणी ॥ १३

मन्दस्मिता स्कन्दमाता शुद्धचित्ता मुनिस्तुता ।
महाभगवती दक्षा दक्षाध्वरविनाशिनी ॥ १४
सर्वार्थदात्री सावित्री सदाशिवकुटुम्बिनी ।
नित्यसुन्दरसर्वाङ्गी सच्चिदानन्दलक्षणा ॥ १५
नाम्नामष्टोत्तरशतमम्बायाः पुण्यकारणम् ।
सर्वसौभाग्यसिद्ध्यर्थं जपनीयं प्रयत्नतः ॥ १६
इदञ्जपाधिकारस्तु प्राणमेव ततस्तुतः ।
आवहन्तीतिमन्त्रेण प्रत्येकञ्च यथाक्रमम् ॥ १७

कर्तव्यं तर्पणं नित्यं पीतमन्त्रेतिमूलवत् ।

तत्तन्मन्त्रैस्तिहोमैति कर्तव्यश्चेतिमालवत् ॥ १८

एतानि दिव्यनामानि श्रुत्वा ध्यात्वा निरन्तरम् ।
स्तुत्वा देवीञ्च सततं सर्वान्कामानवाप्नुयात् ॥ १९

इति श्रीब्रह्मोत्तरखण्डे, आगमप्रख्यातिशिवरहस्ये
अन्नपूर्णाष्टोत्तरशतनामस्तोत्रम्
समाप्तम् ॥

॥ श्रीः ॥

# ॥ अन्नपूर्णाष्टोत्तरशतनामावळिः ॥



ओं अन्नपूर्णायै नमः

शिवायै

देव्यै

भीमायै

पुष्ट्यै

ओं सरस्वत्यै नमः

सर्वज्ञायै

पार्वत्यै

दुर्गायै

शर्वाण्यै १०

ओं शिववल्लभायै नमः
वेदवेद्यायै
महाविद्यायै
विद्यादात्र्यै
विशारदायै
कुमार्यै
त्रिपुरायै
बालायै

ओं लक्ष्म्यै नमः
श्रियै २०
भयहारिण्यै
भवान्यै
विष्णुजनन्यै
ब्रह्मादिजनन्यै
गणेशजनन्यै
शक्त्यै

कुमारजनन्यै
शुभायै
भोगप्रदायै
भगवत्यै ३०
भक्ताभीष्टप्रदायिन्यै
भवरोगहरायै
भव्यायै
शुभ्रायै
परममङ्गलायै

भवान्यै
चञ्चलायै
गौर्यै
चारुचन्द्रकलाधरायै
विशालाक्ष्यै ४०
विश्वमात्रे
विश्ववन्द्यायै
विलासिन्यै
आर्यायै

ओं कल्याणनिलयायै नमः
रुद्राण्यै
कमलासनायै
शुभप्रदायै
शुभावर्तायै
वृत्तपीनपयोधरायै ५०
अम्बायै
संहारमथन्यै

ओं मृडान्यै नमः
सर्वमङ्गलायै
विष्णुसंसेवितायै
सिद्धायै
ब्रह्माण्यै
सुरसेवितायै
परमानन्ददायै
शान्त्यै ६०

परमानन्दरूपिण्यै | शुभलक्षणसम्पन्नायै ७०
परमानन्दजनन्यै | शुभानन्दगुणार्णवायै
परायै | शुभसौभाग्यनिलयायै
आनन्दप्रदायिन्यै | शुभदायै
परोपकारनिरतायै | रतिप्रियायै
परमायै | चण्डिकायै
भक्तवत्सलायै | चण्डमथन्यै
पूर्णचन्द्राभवदनायै | चण्डदर्पनिवारिण्यै
पूर्णचन्द्रनिभांशुकायै | मार्तण्डनयनायै

ओं साध्व्यै नमः
चन्द्राग्निनयनायै ८०
सत्यै
पुण्डरीकहरायै
पूर्णायै
पुण्यदायै
पुण्यरूपिण्यै
मायातीतायै

ओं श्रेष्ठमायायै नमः
श्रेष्ठधर्मायै
आत्मवन्दितायै
असृष्टये ९०
सङ्गरहितायै
सृष्टिहेतवे
कपर्दिन्यै
वृषारूढायै

शूलहस्तायै
स्थितिसंहारकारिण्यै
मन्दस्मितायै
स्कन्दमात्रे
शुद्धचित्तायै
मुनिस्तुतायै १००
महाभगवत्यै
दक्षायै
दक्षाध्वरविनाशिन्यै
सर्वार्थदात्र्यै
सावित्र्यै
सदाशिवकुटुम्बिन्यै
नित्यसुन्दरसर्वाङ्ग्यै
सच्चिदानन्दलक्षणायै १०८

श्री अन्नपूर्णाष्टोत्तरशतनामावळिः
समाप्ता ॥

